# ॥ गायत्रीरहस्योपनिषत् ॥

॥ गायत्रीरहस्योपनिषत् ॥

ॐ स्वस्ति सिद्धम् । ॐ नमो ब्रह्मणे ।
ॐ नमस्कृत्य याज्ञवल्क्य ऋषिः
स्वयंभुवं परिपृच्छति ।
हे ब्रह्मन् गायत्र्या उत्पत्तिः श्रोतुमिच्छामि ।
अथातो वसिष्ठः स्वयंभुवं परिपृच्छति ।
यो ब्रह्मा स ब्रह्मोवाच ।
ब्रह्मज्ञानोत्पत्तेः प्रकृतिं व्याख्यास्यामः ।
को नाम स्वयंभू पुरुष इति ।
तेनाङ्गुलीमथ्यमानात् सलिलमभवत् ।
सलिलात् फेनमभवत् । फेनाद्बुद्बुदमभवत् ।
बुद्बुदादण्डमभवत् । अण्डाद्ब्रह्माभवत् ।
ब्रह्मणो वायुरभवत् । वायोरग्निरभवत् ।
अग्नेरोङ्कारोऽभवत् । ओङ्काराद्व्याहृतिरभवत् ।
व्याहृत्या गायत्र्यभवत् ।गायत्र्या सावित्र्यभवत् ।
सावित्र्या सरस्वत्यभवत् । सरस्वत्या सर्वे वेदा अभवन् ।
सर्वेभ्यो वेदेभ्यः सर्वे लोका अभवन् ।
सर्वेभ्यो लोकेभ्यः सर्वे प्राणिनोऽभवन् ।

अथातो गायत्री व्याहृतयश्च प्रवर्तन्ते ।
का च गायत्री काश्च व्याहृतयः ।
किं भूः किं भुवः किं सुवः किं महः किं जनः किं तपः
किं सत्यं किं तत् किं सवितुः किं वरेण्यं किं भर्गः
किं देवस्य किं धीमहि किं धियः किं यः किं नः किं प्रचोदयात् ।
ॐ भूरिति भुवो लोकः । भुव इत्यन्तरिक्षलोकः । स्वरिति स्वर्गलोकः ।
मह इति महर्लोकः । जन इति जनोलोकः । तप इति तपोलोकः । सत्यमिति
सत्यलोकः ।
तदिति तदसौ तेजोमय तेजोऽग्निर्देवता ।
सवितुरिति सविता सावित्रमादित्यो वै । वरेण्यमित्यत्र प्रजापतिः ।
भर्ग इत्यापो वै भर्गः । देवस्य इतीन्द्रो देवो द्योतत इति
स इन्द्रस्तस्मात् सर्वपुरुषो नाम रुद्रः ।
धीमहीत्यन्तरात्मा । धिय इत्यन्तरात्मा परः ।
य इति सदाशिवपुरुषः । नो इत्यस्माकं स्वधर्मे ।
प्रचोदयादिति प्रचोदित काम इमान् लोकान्

प्रत्याश्रयते यः परो धर्म इत्येषा गायत्री ।
सा च किं गोत्रा कत्यक्षरा कतिपादा । कति कुक्षयः ।
कानि शीर्षाणि । सांख्यायनगोत्रा स चतुर्विंशत्यक्षरा
गायत्री त्रिपादा चतुष्पादा । पुनस्तस्याश्चत्वारः पादाः
षट् कुक्षिकाः पञ्च शीर्षाणि भवन्ति ।
के च पादाः काश्च कुक्षयः कानि शीर्षाणि ।
ऋग्वेदोऽस्याः प्रथमः पादो भवति । यजुर्वेदो द्वितीयः पादः ।
सामवेदस्तृतीयः पादः । अथर्ववेदश्चतुर्थः पादः ।
पूर्वा दिक् प्रथमा कुक्षिर्भवति । दक्षिणा द्वितीया कुक्षिर्भवति ।
पश्चिमा तृतीया कुक्षिर्भवति । उत्तरा चतुर्थी कुक्षिर्भवति ।
ऊर्ध्वं पञ्चमी कुक्षिर्भवति । अधः षष्ठी कुक्षिर्भवति ।
व्याकरणोऽस्याः प्रथमः शीर्षो भवति । शिक्षा द्वितीयः।
कल्पस्तृतीयः । निरुक्तश्चतुर्थः । ज्योतिषामयनमिति पञ्चमः ।
का दिक् को वर्णः किमायतनं कः स्वरः किं लक्षणम्
कानि अक्षरदैवतानि क ऋषयः कानि छन्दांसि का शक्तयः
कानि तत्त्वानि के चावयवाः ।
पूर्वायां भवतु गायत्री । मध्यमायां भवतु सावित्री ।
पश्चिमायां भवतु सरस्वती ।
रक्ता गायत्री । श्वेता सावित्री । कृष्णा सरस्वती ।
पृथिव्यन्तरिक्षं द्यौरायतनानि ।
अकारोकारमकाररूपोदात्तादिस्वरात्मिका ।
पूर्वा सन्ध्या हंसवाहिनी ब्राह्मी ।
मध्यमा वृषभवाहिनी माहेश्वरी ।
पश्चिमा गरुडवाहिनी वैष्णवी ।
पूर्वाह्णकालिका सन्ध्या गायत्री कुमारी
रक्ता रक्ताङ्गी रक्तवासिनीरक्तगन्धमाल्यानुलेपनी
पाशाकुशाक्षमालाकमण्डलुवरहस्ता
हंसारूढा ब्रह्मदैवत्या ऋग्वेदसहिता
आदित्यपथगामिनी भूमण्डलवासिनी ।
मध्याह्नकालिका सन्ध्या सावित्री युवती श्वेताङ्गी
श्वेतवासिनीश्वेतगन्धमाल्यानुलेपनी त्रिशूलडमरुहस्ता
वृषभारूढा रुद्रदैवत्यायजुर्वेदसहिता आदित्यपथगामिनी
भुवोलोके व्यवस्थिता ।
सायं सन्ध्या सरस्वती वृद्धा कृष्णाङ्गी कृष्णवासिनी
कृष्णगन्धमाल्यानुलेपना शङ्खचक्रगदाभयहस्ता

गरुडारूढा विष्णुदैवत्या सामवेदसंहिता आदित्यपथगामिनी
स्वर्गलोकव्यवस्थिता ।
अग्निवायुसूर्यरूपाऽऽवहनीयगार्हपत्यदक्षिणाग्निरूपा
ऋग्यजु सामरूपा भूर्भुवःस्वरिति व्याहृतिरूपा
प्रातर्मध्याह्नतृतीयसवनात्मिका सत्त्वरजस्तमोगुणात्मिका
जाग्रत्स्वप्नसुषुप्तरूपा वसुरुद्रादित्यरूपा
गायत्रीत्रिष्टुब्जगतीरूपा ब्रह्मशङ्करविष्णुरूपेच्छा-
ज्ञानक्रियाशक्तिरूपा स्वराड्विराड्वषड्ब्रह्मरूपेति ।
प्रथममाग्नेयं द्वितीयं प्राजापत्यं तृतीयं सौम्यं
चतुर्थमीशानं पञ्चममादित्यं षष्ठं गार्हपत्यं
सप्तमं मैत्रमष्टमं भगदैवतं नवममार्यमणं
दशमं सावित्रमेकादशं त्वाष्ट्रं
द्वादशं पौष्णं त्रयोदशमैन्द्राग्नं चतुर्दशं वायव्यं
पञ्चदशं वामदेवं षोडषं मैत्रावरुणं
सप्तदशं भ्रातृव्यमष्टादशं वैष्णवमेकोनविंशं वामनं
विंशं वैश्वदेवमेकविंशं रौद्रं द्वाविंशं कौबेरं
त्रयोविंशमाश्विनं चतुर्विंशं ब्राह्ममिति प्रत्यक्षरदैवतानि ।
प्रथमं वासिष्ठं द्वितीयं भारद्वाजं तृतीयं गार्ग्यं
चतुर्थमुपमन्यवं पञ्चमं भार्गवं षष्ठं शाण्डिल्यं
सप्तमं लोहितमाष्टमं वैष्णवं नवमं शातातपं
दशमं सनत्कुमारमेकादशं वेदव्यासं द्वादशं शुकं
त्रयोदशं पाराशर्यं चतुर्दशं पौण्ड्रकं पञ्चदशं क्रतुं
षोडशं दाक्षं सप्तदशं काश्यपमष्टादशमात्रेयम्-
एकोनविंशमगस्त्यं विंशमौद्दालकमेकविंशमाङ्गिरसं
द्वाविंशं नामिकेतुं त्रयोविंशं मौद्गल्यं चतुर्विंशमाङ्गिरस
वैश्वामित्रमिति प्रत्यक्षराणामृषयो भवन्ति ।
गायत्रीत्रिष्टुब्जगत्यनुष्टुप्पङ्क्तिबृहत्युष्णिगदितिरिति
त्रिरावृत्तेन छन्दांसि प्रतिपाद्यन्ते । प्रह्लादिनी प्रज्ञाविश्वभद्रा
विलासिनी प्रभा शान्ता मा कान्ति स्पर्शा दुर्गा सरस्वती विरूपा
विशालाक्षी शालिनी व्यापिनी विमला तमोऽपहारिणीसूक्ष्मावयवा
पद्मालया विरजा विश्वरूपा भद्रा कृपासर्वतोमुखीति
चतुर्विंशतिशक्तयो निगद्यन्ते ।
पृथिव्यप्तेजोवाय्वाकाशगन्धरसरूपस्पर्शशब्दवाक्यानि
पादपायूपस्थत्वक्चक्षुश्रोत्रजिह्वाघ्राणमनोबुद्ध्यहङ्कार-
चित्तज्ञानानीति प्रत्यक्षराणां तत्त्वानि प्रतीयन्ते ।

चम्पकातसीकुङ्कुमपिङ्गलेन्द्रनीलाग्निप्रभोद्यत्सूर्य-
विद्युत्तारकसरोजगौरमरतकशुक्लकुन्देन्दुशङ्खपाण्डु-
नेत्रनीलोत्पलचन्दनागुरुकस्तूरीगोरोचनघनसारसन्निभं
प्रत्यक्षरमनुस्मृत्य समस्तपातकोपपातकमहापातका-
गम्यागमनगोहत्याब्रह्महत्याभ्रूणहत्यावीरहत्या-
पुरुषहत्याऽऽजन्मकृतहत्यास्त्रीहत्यागुरुहत्यापितृहत्या-
प्राणहत्याचराचरहत्याऽभक्ष्यभक्षणप्रतिग्रह-
स्वकर्मविच्छेदनस्वाम्यार्तिहीनकर्मकरणपरधनापहरण-
शूद्रान्नभोजनशत्रुमारणचण्डालीगमनादिसमस्त-
पापहरणार्थं संस्मरेत् ।
मूर्धा ब्रह्मा शिखान्तो विष्णुर्ललाटं रुद्रचक्षुषी चन्द्रादित्यौ
कर्णौ शुक्रबृहस्पती नासापुटे अश्विनौ दन्तोष्ठावुभे सन्ध्ये
मुखं मरुतः स्तनौ वस्वादयो हृदयं पर्जन्य उदरमाकाशो नाभिरग्निः
कटिरिन्द्राग्नी जघनं प्राजापत्यमूरू कैलासमूलं जानुनी विश्वेदेवौ
जङ्घे शिशिरः गुल्फानि पृथिवीवनस्पत्यादीनि नखानि महती
अस्थीनि नवग्रहा असृक्केतुर्मांसमृतुसन्धयः कालद्वयास्फालनं संवत्सरो
निमेषोऽहोरात्रमिति वाग्देवीं गायत्रीं शरणमहं प्रपद्ये ।

य इदं गायत्रीरहस्यमधीते तेन क्रतुसहस्रमिष्टं भवति ।
य इदं गायत्रीरहस्यमधीते दिवसकृतं पापं नाशयति ।
प्रातरमध्याह्नयोः षण्मासकृतानि पापानि नाशयति ।
सायं प्रातरधीयानो जन्मकृतं पापं नाशयति ।
य इदं गायत्रीरहस्यं ब्राह्मणः पठेत् तेन गायत्र्याः
षष्टिसहस्रलक्षाणि जप्तानि भवन्ति । सर्वान् वेदानधीतो भवति ।
सर्वेषु तीर्थेषु स्नातो भवति । अपेयपानात् पूतो भवति ।
अभक्ष्यभक्षणात् पूतो भवति । वृषलीगमनात् पूतो भवति ।
अब्रह्मचारी ब्रह्मचारी भवति ।
पङ्क्तिषु सहस्रपानात् पूतो भवति ।
अष्टौ ब्राह्मणान् ग्राहयित्वा ब्रह्मलोकं स गच्छति ।
इत्याह भगवान् ब्रह्मा ॥

इति गायत्रीरहस्योपनिषत् समाप्ता ॥